॥ संन्यासि गीतिका ॥

गीतं गाय सुतुङ्गतानसहितं दूरात्सुदूरोत्थितं
संसारोद्भवदोषलेशरहितश्श्वेताद्रिगर्भोद्भवम् ।
उत्पन्नं च वनस्थलेऽतिगहने,--तद्ध्येव दोध्वन्यतां
सन्यासिन् ! भव वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।

शान्तिर्यस्य कदापि वै धनयशःकामैर्न संभिद्यते
यस्मिंश्चापि सुमुक्तिदा प्रवहति ज्ञानस्य गङ्गा सदा ।
सत्यानन्दविधारिणी भगवती,--तत्रोत्थितं गीयतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।   १

पाशांश्छिन्धि ततः स्वकांश्च सततं ये त्वां निबध्नन्ति वै
सौवर्णांश्च तथा चमत्कृतिमतो लोहादियुक्तांश्च वा ।
रागद्वेषशुभाशुभं च , --सकला द्वन्द्वावली दूयतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।

संश्लिष्टोऽथ च दण्डितोऽपि कशया दासस्तु दासो हि सः
सौवर्णस्य विघट्टितो यदि भवेत् पाशस्तु पाशो यतः ।
बन्धायैव समर्थितः,--परमतः पाशश्च विच्छिद्यतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।   २

दूरं गच्छतु मोहजालजटिलं तामिस्रभूतन्तमः
येनैतद्धि सुबुद्धिविभ्रमकरैः संवर्ध्यतेऽन्धन्तमः ।
एवं मोहमयी हि जीवनतृषा--सा सर्वथा शम्यतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।

उत्पत्तेश्च मृतिं मृतेश्च जननं जीवोऽनयाकृष्यते
स्वात्मा येन जितः सखे शृणु जगत्तेनैव सञ्जीयते ।
विद्ध्येवं च सदैव मोक्षणविधौ धृत्या व्यवस्थीयतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।   ३

□ वप्ता भुङ्क्ष्यति निश्चितं फलमतः, कार्यं च वै कारणात्
भद्राद्भद्रमथाशुभादशुभमप्येतद्व्यवस्थापितम् ।
शक्तः कोऽपि न लङ्घितुं कथमपि □ त्वेवं त्वया बुद्ध्यतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।

□यस्त्वाकारमवाप्स्यति ध्रुवमिदं बद्धो भविष्यत्य□□□
एतत्सत्यमथापि भो ! शृणु, सदा मुक्तः सदात्मा यतः ।
नामाकारविवर्जितोऽस्ति च--ततः तत् त्वं हि निश्चीयतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।  ४

ते जानन्ति न सत्यमेव नितरां ये स्वप्नसङ्कल्पितान्
पश्यन्त्येव यथा--पिता च जननी पुत्राश्च पत्नी सखा ।
आत्मा लिङ्गविवर्जितः शृणु सखे ! व्यर्थं न वै कल्प्यतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।

आत्मा कस्य पिता ? तथा कथय भो !--कस्यास्ति पुत्रश्च सः ?
बन्धुः कस्य ? तथा रिपुश्च वद यस्त्वेको हि निर्लिङ्गकः ?
अन्यो नास्ति ततश्च सर्वमयतः,--तत् त्वं हि निश्चीयतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।  ५

एकस्तिष्ठति नित्यमुक्तविभवः ज्ञाता सदात्मा, मुने !
नामाकारविकारकल्पनकलालेशो न तस्मिन् मुने !
साक्षात्तत्त्वमसीति विद्धि सततं ज्ञाने च निष्ठीयतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।

तं चाश्रित्य तनोति मोहघटितान् स्वप्नान् हि माया बहून्
साक्षी दृश्यतया विभाति च तथा जीवस्वरूपस्तदा ।
साक्षात्तत्त्वमसीति विद्धि सततं ज्ञाने च निष्ठीयतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।  ६

कुत्रान्विष्यसि मुक्तितां ? प्रियसखे ! नायं हि लोकस्तु ते
लोकोऽन्योऽपि न दत्स्यते कथमपि, ग्रन्थेषु वै मन्दिरे ।

व्यर्थश्चास्ति परिश्रमोऽत्र भवता स्वाभ्यन्तरेऽन्विष्यतां
सन्यासिन् ! भव  वीरभाववभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।

येन त्वं परिपीडितोऽसि नितरां, हस्ते त्वदीये हि तत्
हस्तेनैव हि धार्यते च सकलं त्वत्पाशजालं महत् ।
तस्माच्छोकविलापनं त्यज सखे ! --पाशश्च भो ! मुच्यतां
सन्यासिन् ! भव  वीरभाववभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।  ७

सर्वेभ्योऽस्तु शिवं तथा न च भवेन्मत्तो भयं प्राणिनां,
स्वर्गे यस्तु विराजते, क्षितितले नीचैश्च सर्पन्ति ये ।
सर्वेषामहमस्मि जीवनधरात्मेति,--त्वया कथ्यतां
सन्यासिन् ! भव  वीरभाववभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।

आमुष्मिक्यमथैहिकं च सकलं भोगं त्यजामि स्वकं
स्वर्गं, भौममथो तथा च नरकं, सर्वं प्रतीक्षाभयम् ।
सन्यस्तं हि मयेति भो ! कथय, च त्वद्बन्धनं कर्त्यतां
सन्यासिन् ! भव  वीरभाववभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।  ८

तस्मान्नैव विचिन्त्यतां निजवपुस्तिष्ठत्वथो यातु वा
कार्यं तेन सुसाधितं , त्वमधुना दैवार्पणं तत् कृथाः ।
पुष्पैरर्चतु, पादमाक्षिपतु वा किञ्चिन्न वै कथ्यतां
सन्यासिन् ! भव  वीरभाववभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।

पूजा तत्र विगर्हणं कथमपि स्थातुं न वै शक्नुतः
स्तुत्यस्तावकनिन्द्यनिद्यकगणाः यत्रैक्यभावं गताः ।
इत्थं शान्तमना भवान् भवतु च द्वैतं न वै दृश्यतां
सन्यासिन् ! भव  वीरभाववभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।  ९

सत्यं तत्र न भासते, यदि भवेत् कामो, यशो, लालसा
यां काञ्चित्परिपश्यति स्त्रियमथो पत्नीत्वभावेन यः ।
मोक्षस्तस्य न शक्यते कथमपि,--स्वान्तस्ततः शुध्यतां
सन्यासिन् ! भव  वीरभाववभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।

स्वल्पं चापि परिग्रहन्तु कुरुते, क्रोधेन यो बध्यते ।
मायाद्वारविपाटनं नहि सखे ! दुष्टैर्हि सम्भाव्यते ।
तस्मान्मोक्षविभावनाय सततं कामादिकं त्यज्यतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।  १०

मित्र ! त्वं ह्यनिकेतनो भव सदा--किं तद्गृहं यच्च भो !
त्वामाच्छदायितुं प्रभुर्भवति ? तु स्वाच्छादनं ते नभः ।
शय्या ते भुवि सुन्दरी तृणमयी--तत्र त्वया श्राम्यतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।

दैवाल्लब्धमवाप्य भोजनमथापक्वं सुसिद्धं तथा
किञ्चिन्नैव विचिन्त्यतां, प्रियसखे ! ह्यन्नाच्च पान्नाच्च वा ।
आत्मज्ञो न हि लिप्यतेऽत्र भवता गङ्गावदाचर्यतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।  ११

सत्यं वेत्ति हि कश्चिदेव विबुधः, शेषस्तु विद्विक्ष्यते !
त्वां चैवोपहसिष्यति ह्यथ खलस्त्वं चोत्तमो वर्तसे ।
हास्यद्वेषमतस्त्वया हि सुमहन् !--किञ्चिन्न वै वीक्ष्यतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।

स्वातन्त्र्येण च गम्यतां प्रियसखे ! देशाच्च देशं तथा,
मायामोहसमावृतांश्च कुरु भो ! मोहान्धकाराद्बहिः ।
त्यक्त्वा कष्टभयं तथा सुखचयं-द्वन्द्वात्परं स्थीयतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।  १२

इत्थं चैव दिनाद्दिनं भवति चेत् यावद्धि कर्मक्षयः
आत्मा मोक्षमवाप्स्यति, ह्यथ पुनर्भावो न वर्तिष्यते ।
तस्मान्मृत्युमुखात् प्रमुच्य, भवता--स्वात्मन्यवस्थीयतां
सन्यासिन् ! भव  वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ ।

तत्रास्मन्न च युष्मदस्ति च कुतो जीवेशभावभ्रमः
सर्वं मय्यहमेव विश्वमखिलं, चानन्दरूपोऽस्म्यहम् ।
नित्यानन्दमयश्च, भो ! त्वमसि तत् ब्रह्मेति निश्चीयतां
सन्यासिन् ! भव वीरभावभरितः सूद्गीथ उद्घोष्यताम् ॥

--ॐ तत् सत् ॐ । १३